॥ तीव्रचण्डिकास्तोत्रम् ॥
अथवा श्रीमार्कण्डेयपुराणोक्त चण्डिकास्तोत्रम् ।

॥ ध्यानम् ॥

चामुण्डा प्रेतगा विकृता चाऽहि भूषणा
दंष्ट्रालि क्षीणदेहा च गर्ताक्षी कामरूपिणी ।
दिग्बाहुः क्षामकुक्षि मुशलं चक्रचामरे
अङ्कुशं विभ्रती खड्गं दक्श्ःइणे चाथ वामके ॥

खेटं पाशं धनुर्दण्डं कुठारं चापि बिभ्रती

या देवी खड्गहस्ता सकलजनपदव्यापिनी विश्वदुर्गा
श्यामाङ्गी शुक्लपाशा द्विजगणगणिता ब्रह्मदेहार्थवासा । var शुक्लनासा द्विजगणनमिता
ज्ञानानां साधयन्ती यतिगिरिगमनज्ञान दिव्य प्रबोधा var साधयित्री
सा देवी दिव्यमूर्तिः प्रदहतु दुरितं चण्डमुण्डा प्रचण्डा ॥ १॥

ॐ ह्रां ह्रीं ह्रूं चर्ममुण्डे शवगमनहते भीषणे भीमवक्त्रे
क्रां क्रीं क्रूं क्रोधमूर्तिर्भिः कृतस्तवमुखे रौद्रदंष्ट्राङ्कराले । var क्रोधमूर्ति विकृत कुचमुखे
कं कं कं कालरात्रिः भ्रमसि जगदिदं भक्षयन्ती ग्रसन्ती var कालधारी
हूङ्कारोच्चारयन्ती प्रदहतु दुरितं चण्डमुण्डा प्रचण्डा ॥ २॥

ॐ ह्रां ह्रीं ह्रूं रुद्ररूपे त्रिभुवननमिते पाशहस्ते त्रिनीत्रे
रां रीं रूं रङ्गरङ्गे किलिकिलितरवे शूलहस्ते प्रचण्डे ।
लां लीं लूं लम्बजिह्वे हसति कहकहाशुद्ध घोराट्टहासैः
कं काली कालरात्रिः प्रदहतु दुरितं चण्डमुण्डा प्रचण्डा ॥ ३॥

ॐ घ्रां घ्रीं घ्रूं घोररूपे घघघघ घटितैर्घर्घुरारावघोरे
निर्मांसी शुष्कजङ्घे पिबतु नरवसा धूम्रधूम्रायमाने ।
ॐ द्रां द्रीं द्रूं द्रावयन्ती सकलभुवि तथा यक्षगन्धर्वनागैः var तले
क्षां क्षीं क्षूं क्षोभयन्ती प्रदहतु दुरितं चण्डमुण्डा प्रचण्डा ॥ ४॥

ॐ भ्रां भ्रीं भ्रूं चण्डवर्गे हरिहरनमिते रुद्रमूर्तिश्च कीर्तिः var ज्रां ज्रीं ज्रूं
चन्द्रादित्यौ च कर्णौ जडमकुटशिरोवेष्टितां केतुमाला ।
स्रक्सर्वौ चोरगेन्द्रौ शशिकिरणनिभा तारको हार कण्ठे
सा देवी दिव्यमूर्तिः प्रदहतु दुरितं चण्डमुण्डा प्रचण्डा ॥ ५॥

ॐ खं खं खं गवस्ते वरकनकनिभे सूर्यकान्ति स्वतेजः var खड्गहस्ते
विद्युज्ज्वालावलीनां नवनिशितमहाकृत्तिका दक्षिणेन ।
वामे हस्ते कपालं वरविमलसुरापूरितं धारयन्ती
सा देवी दिव्यमूर्तिः प्रदहतु दुरितं चण्डमुण्डा प्रचण्डा ॥ ६॥

ॐ हुं हुं हुं फट् कालरात्रिः उरु (रु रु) सुरमथिनी धूम्रमारी कुमारी
ह्रां ह्रीं ह्रूं हत्तिशोरौक्षपितिकिलिकिला शब्द अट्टाट्टहासे ।
हा हा भूत प्रभूते किलिकिलितमुखा कीलयन्ती ग्रसन्ती var प्रसूते
हूङ्कारोच्चारयन्ती प्रदहतु दुरितं चण्डमुण्डा प्रचण्डा ॥ ७॥

ॐ भृङ्गी कालीकपाली परिजनसहिते चण्डिचामुण्डनित्या
रों रों रोङ्कारनित्ये शशिकरधवले कालकूटे दुरन्ते ।
हुं हुं हुङ्कारकारी सुरगणनमिते कालकारी विकारी
त्र्यैलोक्यं वश्यकारी प्रदहतु दुरितं चण्डमुण्डा प्रचण्डा ॥ ८॥

ॐ वन्दे दण्डप्रचण्डा डमरुमणिमारणष्टोपटङ्कारघण्टै
नृत्यन्ती याट्टपातैः रटपट विभवैर्निर्मला मन्त्रमाला । var हासैः
शुष्के कुक्षे वहन्ती खरखरितसखा चार्चिनी प्रेतमाला var शुष्कौ कुक्षौ
उच्चैशैत्याट्टहासैः घरुघरितरवा त्वं चण्डमुण्डा प्रचण्डा ॥ ९॥

ॐ त्वं ब्राह्मी त्वं च रौद्री त्वं सच शिकगमना त्वं च देवी कुमारी
त्वं चक्रे चक्रहस्ता घरुघरितरवा त्वं वराहस्वरूपा ।
रौद्रे त्वं चर्ममुण्डा सकलभुवितले संस्थिते सर्वमार्गे
पाताले शैलशृङ्गे हरिहरनमिते देवी चण्डी नमस्ते ॥ १०॥

नमस्ते नमस्ते नमः

ॐ रक्षत्वं मुड्डधारी गिरिगुहविहरे निर्झरे पर्वते वा
सङ्ग्रामे शत्रुमध्ये विशविशभविते सङ्कटे कुत्सिते वा ।
व्याघ्रे चौरे च सर्वेप्युः दधिभुवितले तथा वह्निमध्ये दुर्गे
रक्षेत्वां दिव्यमूर्तिः प्रदहतु दुरितं चण्डमुण्डा प्रचण्डा ॥ ११॥

इत्येवं बीजमन्त्रैः स्तवनमति शिवं पातकं व्याधिनाशं
प्रत्यक्षं दिव्यरूपं ग्रहगणमथनं मर्दनं शाकिनीनाम् ।
इत्येवं वेगवेगं सकलभयहरं मन्त्रमूर्तिश्च नित्यं var मन्त्रशक्तिश्च
मन्त्राणां स्तोत्रकं यः पठति स लभतौ प्रार्थितां मन्त्रसिद्धिम् ॥ १२॥

ॐ नमश्चण्डिकायै नमश्चण्डिकायै नमश्चण्डिकायै ।

